"अज्जवि सा सुमरिज्जइ को नेहो एगराईए।"[1]

सूरिर्हि प्राह—

"गोलानइतीरे सुन्नदेउलंमि जंसि वासमिओ ॥ १ ॥"[2]

इत्यन्योन्यं गाढमालिलिङ्गतुरुभौ। तत आम आह स—

"अद्य मे सफला प्रीति–रद्य मे सफला रतिः।
अद्य मे सफलं जन्म, अद्य मे सफलं फलम् ॥ १ ॥"

रात्रौ इष्टगोष्ठी ववृते मधुमधुरा। ततः प्रभाते सूरि(णा) धर्माय आमस्य विशिष्टपुरुषा दर्शिताः। एते आमनृपनराः किलास्मानाह्वातुमायाता इति। सूरिभिरुक्तम्–आम! आगम्यताम्। धर्मेण राज्ञा पृष्टं विशिष्टजनपार्श्वे–भो आमप्रधाननराः! स भवतां स्वामी कीदृग्रूपः?। तैर्निगदितम्–यादृगयं स्थगीधरस्तादृशोऽस्ति। प्रथमं मातुलिङ्गं करे धृत्वा आम आनीतोऽस्ति। सूरिणा पृष्टम्–भोः स्थगीधर! तव करे किमेतत्?। स्थगीधरभूतेन आमेनोक्तम्–बीजउरा (द्वितीयो राट्) इति। क्षणार्धेन वार्तामध्ये सूरिभिः सूक्तमवतारितम्—

[3]"तत्तीसीयलीमेलावा केहा, धणउत्तावली पिउमंदसिणेहा।
विरहिं माणसु जे मरइ तसु कवण निहोरा कन्नि ए वत्तडी जणु जाणइ दोरा ॥१॥"[4][5]

इत्यादि गोष्ठ्यां वर्तमानायां स्थगीधर श्रीआमराजश्छिद्रूपको मेलापकान्निःसृत्य पुराद् वहिः स्थाने स्थाने स्थापितैर्वाहनैः कियतीं भुवं प्रत्याक्रामत् तावता (सूरिभिर्धर्मनृपो गोपगिरिगमनाय पृष्टः, धर्मेण प्रतिज्ञा स्मारिता, सूरिभिः तत्पूर्त्तिः स्थगीधररूपेणामागमनेनोक्ता, प्रधानजनः) पृष्टः। तेनोक्तम्–सत्यं सूरिवचः। हस्तौ दर्शितौ, राजा तेन वाक्संवादेन प्रीतः, "अज्जवि सा परितप्पइ" इत्यादि सर्वं सारस्वतविलसितमिति निरचैषीत्। शीघ्रं शीघ्रं गोपालगिरिं गतः, पताकातोरणमञ्चप्रतिमञ्चादिमहास्तत्रासन्, दिवसाः कत्यपि अतिक्रान्ताः। ततः श्रीसिद्धसेनसूरयो वार्धकेन पीडिता अनशनं ग्रहीतुकामाः श्रीबप्पभट्टिसूरीणामाकारणाय गीतार्थयुगलं प्रैषिषुः, तं गुरोर्लेखमदीदृशत्। तत्र लिखितं यथा—

"अध्यापितोऽसि पदवीमधिरोपितोऽसि
तत् किंचनापि कुरु बप्पभट्टे(टे)! प्रयत्नात्।
प्रायोपवेशनरथे विनिवेश्य येन
संप्रेषयस्यमरधाम नितान्तमस्मान् ॥ १ ॥"—वसन्त०

---

१ अद्यापि सा स्मर्यते कः स्नेह एकरात्र्या।

२ गोदावरीनदीतीरे शून्यदेवकुले यदसि वासमितः ॥ १ ॥

३ तप्तशीतलयोर्मेलापकः कीदृशः? धनपुत्रबलिनोः प्रियमन्दस्नेहयोः।
विरहे मनुष्यो यो म्रियते तस्य किं निष्क्रयणं? कर्णे एषा वार्त्ता जनो जानाति दुर्लभम् ॥ १ ॥

४ 'तच्छीसी अलामेलावा केहा णण उत्तावली प्रियमंदसिणेहाविरहिर्हि।
माणसु जं मरइ तसु कवण निहोरा कलिपवित्तडी जुणु जाणइ दोरा ॥' इति पाठः प्रभावक-चरित्रे (पृ० ११४)।

५ एतद्गाथाया अर्थानां साष्टकं शतं व्याख्यातं बप्पभट्टिसूरिभिः, परन्तु न च सर्वेऽधुना लभ्यन्ते, अर्थचतुष्टयं तु प्रभावकचरित्रे दृश्यते।

तद् दृष्ट्वा आमभूपतिमापृच्छ्य मोढेरकं पुरं ब्रह्मशान्तिस्थापितवीरजिनमहोत्सवाढ्यं प्रापुः, ते गुरून् ववन्दिरे । गुरवोऽपि तान् बाढमालिङ्ग्य आलापयांबभूवुः—वत्स! गाढमुत्कण्ठितमस्माकं हृदयं, मुखकमलकमपि विस्मृतं, राजानुगमनमस्माकं दुःखायासीत्, कारय साधनं, अनृणीभव । ततोऽन्त्याराधनाचतुःशरणगमनदुष्कृतगर्हासुकृतानुमोदिना तीर्थमालावन्दनादिविधिना विधापिता, देवलोकललनानयनत्रिभागपात्रतामानशुः । शोक उच्छलितः । ततो बप्पभट्टिः श्रीमद्गोविन्दसूरये श्रीनन्नसूरये च गच्छभारं समर्प्य श्रीआमपार्श्वे समागतः, पूर्ववत् समस्यादिगोष्ठ्यः स्फुरन्ति ।

एकदा सूरिर्नृपसभायां चिरं पुस्तकाक्षरदत्तदृक् तस्थौ । तत्रैका नर्तकी नृत्यन्ती आसीद् रूपदासीकृताप्सराः । सूरिर्दृग्नीलनिवारणाय तस्याः शुकपिच्छनीलवर्णायां नीलकञ्चुलिकायां दृशं निवेशयामास । आमस्तथा दृष्ट्वा मनसि पपाठ—

"सिद्धंततत्तपारं-गयाण जोगीण जोगजुत्ताणं ।
जइ ताणंपि मयच्छी, मणंमि ता सच्चिय पमाणं ॥ १ ॥"—आर्या

आमो रात्रौ पुंवेषितां नर्तकीं सूरिवसतौ प्रैषीत् । तया सूरीणां विश्रामणाऽऽरब्धा । करस्पर्शेन ज्ञाता युवतिः । सूरिणाऽभिहिता—का त्वम्? कस्मादिहागता? अस्मासु ब्रह्मव्रतनिविडेषु वराकि! भवत्याः कोऽवकाशः? वात्याभिर्न चलति काञ्चनाचलः । तयोक्तम्—भवद्भ्यः उपदेष्टुमागता—

"राष्ट्रे सारं वसुधा, वसुधायामपि पुरं पुरे सौधः ।
सौधे तल्पं तल्पे, वराङ्गनाऽनङ्गसर्वस्वम् ॥ १ ॥"—आर्या

इति । किञ्च—

"प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरैः? ।
प्राप्यते येन निर्वाणं, सरागेणापि चेतसा ॥ २ ॥"—अनु०

श्रीआमेन प्रेषिताऽहं भवतां प्राणवल्लभा शुश्रूषार्थम् । ततः सूरिशक्रो वदति स्म—अस्माकं ज्ञानदृक्प्राप्तद्रव्याणां नैव व्यामोहाय प्रगल्भसे—

"मलमूत्रादिपात्रेषु, गात्रेषु मृगचक्षुषाम् ।
रतिं करोति को नाम, सुधीर्वर्चोगृहेष्विव? ॥ १ ॥"—अनु०

साऽपि निर्विकारं सूरिवरं निश्चित्य ध्वनच्चेता प्रातर्नृपतिसमीपं गता । पृच्छते राज्ञे रात्रीयः सूरिवृत्तान्तः कथितस्तया । पाषाणघटिता इव तव गुरवः । नवनीतपिण्डमयोऽशेषो वराको लोकः । यावन्तः कपटप्रपञ्चा हाव-भाव-कटाक्षक्षेप-भुजाक्षेप-चुम्बन-नखदन्तक्षतादिविलासास्ते सर्वे आजन्मशिक्षितास्तत्र प्रयुक्ताः, पुनस्तिलतुषत्रिभागमपि मनोऽस्य नाचालीत् । अनुराग-बलात्कार-फूत्कार-भीदर्शन-हत्यादानादिभिर्विभीषिकाभिरपि नाक्षुभत् । तदेष मन्ये महावज्रमयो न देवकन्याभिर्न विद्याधरीभिर्नागाङ्गनाभिश्चाल्येत, मानुषीणां

---

१ सिद्धान्ततत्त्वपारगतानां योगिनां योगयुक्तानाम् ।
यदि तेषामपि मृगाक्षी मनसि ततः सैव प्रमाणम् ॥ १ ॥

तु का कथा ? । अस्मिन् सूरौ धर्मस्थैर्ययुते नृपो विस्मयानन्दाभ्यां कदम्बमुकुलस्थूलरोमाञ्च-कञ्चुकितगात्रः संवृत्तः । दध्यौ च गुरुं ध्याने प्रत्यक्षं कृत्वा—

"न्युञ्छने यामि वाक्यानां, दृशोर्याम्यवतारणम् ।
वेलिक्रियेह सौहार्दं, हृद्याय हृदयाय ते ॥ १ ॥"–अनु०

प्रातर्गुरवः समाजग्मुः । राजा ह्रीणो न वदति किञ्चित् । सूरिभिर्वर्णितम्–राजन् ! मा लज्जिष्ठाः, महर्षीणां दूषणभूषणान्वेषणं राज्ञा कार्यम्, न दोषः । राज्ञोक्तम्–अलमतीत-वृत्तान्तचर्चया । एतदहमुत्तम्भितभुजो ब्रुवे युष्मान् ब्रह्मधनान् समवलोक्य—

"धन्यास्त एव धवलायतलोचनानां
तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरि लसत्त्रिवलीलतानां
दृष्ट्वाऽऽकृतिं विकृतिमेति मनो न येषाम् ॥ १ ॥"–वसन्त०

इत्युक्त्वा दण्डप्रणामेन प्रणनाम आमः ॥

अन्येद्युः राजा राजपथेन सञ्चरमाणो हालिकप्रियां एरण्डबृहत्पत्रसंवृत्तस्तनविस्तरां एरण्डपत्राणि विचिन्वतीं गृहपार्श्वात्यभागे दृष्ट्वा गाथार्धं योजितवान्—

"तइवि वरनिग्गयदलो एरण्डो सोहइ व तरुगणाणं ।"

तत् सूरीणां पुरः समस्यात्वेन समर्थितवान् । सूरय ऊचुः—

"ईत्थ घरे हलियवहू इद्दहमित्तत्थणी वसइ ।"

राजा विस्मितः–अहो सारं सारस्वतम् ॥

अन्यदा सायं प्रोषितभर्तृकां वासभवनं यान्तीं वक्रग्रीवां दीपकरां ददर्श । गाथार्धं प्रोचे—

"दिट्ठा वंकग्गीवा अदीवउपहियजायाए ।"

सूर्यग्रे पपाठ । सूरिर्गाथापूर्वार्धमुवाच—

"पियसंभरणपलुट्टंतुअंसुधारानिवायभीयाए ॥ १ ॥" –

इति । सूरिभूपौ सुखेन कालं गमयतौ धर्मपरौ ॥

अन्यदा धर्मनृपेण प्रहितः आमनृपस्य पार्श्वे दूत एत्यावोचत्—राजन् ! तव विचक्ष-णतया धर्मनृपः संतुष्टः, पुनः स आह–भवद्भिर्वयं छलिताः, यतो भवद्भ्यो गृहमागतेभ्यो नास्माभिर्महानल्पोऽपि सत्कारः कृतः । अधुना शृणुत–अस्मद्राज्ये वर्धनकुञ्जरो नाम महावादी बौद्धदर्शनो विदेशादागतस्तेन सह संवादं जिघृक्षुः यः कोऽपि वो राज्ये

१ 'वाक्याय दृग्भ्यां याम्यवतारणे' इति पाठः प्रभावक–चरित्रे ( पृ० १५२ ) ।
२ 'बलिर्विधीये सौहार्दहृद्याय हृदयाय च' इति पाठान्तरं प्रभावक–चरित्रे ( पृ० १५२ ) ।
३ तदापि वरनिर्गतदल एरण्डः शोभते एव तरुगणेषु ।
४ अत्र ( पश्चात् ) गृहे हालिकवधूः एतावन्मात्रस्तना वसति ।
५ दृष्टावक्रग्रीवा......
६ प्रियस्मरणप्रलुठिताश्रुधारानिपातभीत्या ।

वादी भवति स आनीयताम्। अस्माकं भवद्भिः सह चिरं वैरम्। यः कोऽपि वादी जयी भविष्यति तत्प्रभुरपरस्य राज्यं ग्रहीष्यति। मम वादिना यदा जितं तदा त्वदीयं राज्यं मया ग्राह्यम्। यदि तव वादिना जितं तदा मदीयं राज्यं त्वया ग्राह्यम्। अयं पणः वाग्युद्धमेवास्तु, किं मानवकदर्थनेन ?। आमेनोक्तम्—दूत! त्वया यदुक्तं तद् धर्मेण कथापितं अथवा स्वतुण्डकण्डनिमात्रेणोक्तम् ?। यदि मे तव प्रभुः सप्ताङ्गं राज्यं वादे जिते समर्पयिष्यति इदं सत्यं तदा वयं वादिनमामन्त्र्यागच्छामः। दूतेनोक्तम्—कारणवशात् युधिष्ठिरेणापि द्रोणपर्वण्यसत्यं भाषितम्। मत्प्रभुस्तु कारणेऽपि न मिथ्या भाषते। आमेन दूतः प्रैषि, उक्तदिनोपरि बप्पभट्टिं गृहीत्वा अर्धपथे उक्तस्थाने अगमत्। धर्मभूपतिरपि वर्धनकुञ्जरं वादीन्द्रमादाय तत्राजगाम। परमारवंशनरेन्द्रमहाकविवाक्पतिनामानं स्वसेवकं सहादाय समानिन्ये। उचितप्रदेशे आवासान् दापयामास। ततो वादिप्रतिवादिनौ पक्षप्रतिपक्षपरिग्रहेण वादमारेभाते। सभ्याः कौतुकाक्षिप्ताः पश्यन्ति। द्वावप्यसामान्यप्रतिभौ ज्ञौ च। वादे षण्मासा गताः। द्वयोर्मध्ये कोऽपि न हारयति, कोऽपि न जयते। आमेन सूरयः प्रोक्ताः—सर्वाङ्गराजकार्याणां प्रत्यूहः स्यात् (तस्मात्) निर्जीयतामसौ शीघ्रम्। सूरिणा भणितम्—प्रभाते निग्रहीष्यामि, मा स्म वो भ्रान्तिरभूत्। रात्रौ सूरीश्वरेण मन्त्रशक्त्या मण्डले हारार्धहारमणिकुण्डलमण्डिताङ्गी दीप्ताङ्गरागवसना दिव्यकुसुमपरिमललुलितभवनोदरा भगवती भारती साक्षादागता चतुर्दशभिः काव्यैः साद्यस्कैर्दिव्यैः स्तुता। देव्या उक्तम्—वत्स! केन कारणेन स्मृता ?। सूरिवरेण भणितम्—षण्मासा वादे लग्नाः, तथा कुरु यथा वादे निरुत्तरीभवति। वाग्देव्या गदितम्—वत्स! अहं अनेन प्राक् सप्तभवानाराधिता, मयाऽत्र भवेऽस्मै अक्षयवचना गुटिका दत्ता। तत्प्रभावाच्चक्रिनिधिधनमिव नास्य वचो ज्ञायते। सूरिणोक्तम्—त्वं देवि! जैनशासनविरोधिनी येन मे जयश्रियं न दत्से ?। भारत्यूचे—वत्स! जयोपायं ब्रुवे, त्वया प्रातर्वादारम्भे सर्वे वदनशौचं कारणीयाः पार्षद्याः, गण्डूषं कुर्वतस्तस्य वदनाच्च गुटिका ममेच्छया पतिष्यति, तदा त्वया जेष्यति(ते), एकं तु याचे—मे स्तुतेः चतुर्दशं काव्यं कस्याप्यग्रे न प्रकाश्यम्, तत्पठने हि मया ध्रुवं प्रत्यक्षया भाव्यम्, कियतां प्रत्यक्षा भवामि ? क्लेशेनालम्। एवमुक्त्वा देवी विद्युज्झाङ्कारलीलया तिरोदधे। सूरिभिर्निशि परमाप्तः शिष्य एको वाक्पतिराजसमीपे प्रतिहित्योदितम्, यथा सूरयो वदन्ति—त्वं राजन्! विद्यानिधिः, अस्माकं लक्षणावतीपुरीपरिचितचरः, तदाऽवादीः—भगवन्! निरीहा भवन्तः, कां भवद्भक्तिं दर्शयामि ?। तदा वयं अवोचामः—अवसरे कामपि भक्तिं कारयिष्यामः। भवद्भिर्भणितं तथाऽस्तु। इदानीं सोऽवसरोऽत्र समायातः। वाक्पतिना सूरिशिष्यः (भणितः)—किं सूरयः समादिशन्ति मे ? आदिष्टं करवै ध्रुवम्। शिष्यो न्यवेदयत्—राजन्! गुरवः समादिशन्ति—प्रातः धर्मामयोः सदःस्थयोः सतोस्त्वया वाच्यं यथा वदनशौचं विना भारती न प्रसीदति, तस्माद् वादिप्रतिवादिसभ्यसभ्येशाः सर्वे शौचं कुर्वन्तु, एतावति कृते

भवतां नः सर्वस्नेहः कृत एव। वाक्पतिना तदङ्गीकृतम्। शिष्येणोपगुरुं गत्वा तत् सत्प्रतिज्ञातं कथितम्। तुष्टा गुरवः। प्रत्यूषं उदयति भगवति गभस्तिमालिनि लाक्षालिप्त इव प्राचीमुखे राजानौ सभायामगाताम्। वाक्पतिना सर्वे वदनशौचं कारिताः, बौद्धवादीन्द्रोऽपि, तस्य वदनकमलाद् विगलिता गुटिका पतद्ग्रहे, बप्पभट्टिशिष्यैः पतद्ग्रहो जवैः दूरे कारितः। गुटिका सूरीन्द्रसात् जाता। बौद्धो गुटिकाहीनः सूरिणा पार्थेन कर्ण इव दिव्यशक्तिमुक्तो निःशङ्कं वाक्पृपत्कैर्हतोः निरुत्तरीकृतो राहुग्रस्तश्चन्द्र इव हिमानीविलुप्तसत्रुपण्ड इव भृशं नैस्तेजसं भेजे। तदा श्रीबप्पभट्टेर्निर्विवादं वादिकुञ्जरकेसरीति विरुदं स्वैः परैश्च दत्तम्। धर्मेण सप्ताङ्गं राज्यं आमाय दत्तम्। लाहीदं, धर्मार्द्धि राज्यं लभते, का चर्चा ? आमेन गृहीतं, तदा सूरिणा आमः प्रोक्तः—राजन्! पुना राज्यं धर्माय देहि। महीदानमिदं शोभते च ते। राजस्थापनाचार्याश्च यूयम्। पारम्पर्येण श्रीरामेण वनस्थेनापि सुग्रीवविभीषणौ राजीकृतौ। त्वमप्यैदंयुगीननृपेषु तत्तुल्यः। एतद्वचनसमकालमेव आमेन गाम्भीर्यौदार्यधाम्ना धर्माय तद्राज्यं प्रत्यर्पि, स परिधापितः। मत्ता ये दन्तिनस्ते शतं, तुङ्गास्तुरङ्गाः सहस्रं सद्रथा ( प्लवाः ) रथाः शतं वादित्राणि इति प्रादायि। ततः स्वं स्वं स्थानं गताः सर्वे। सूरिभूपौ यशोधवलितसप्तभुवनौ गोपगिरौ महावीरमवन्दिषाताम्; तदा सूरिकृतं वीरस्तवनम्—"शान्तो वेषः शमसुखफली"त्यादिकाव्यैकदेशमयं, अद्यापि सङ्घे पठ्यते। सङ्घेन प्रभुर्ववन्दे तुष्टुवे च—

"रवेरेवोदयः श्लाघ्यः, कोऽन्येषामुदयग्रहः ?।
न तमांसि न तेजांसि, यस्मिन्नभ्युदिते सति ॥ १ ॥"

अन्यदा स्वपरसमयसूक्तैः प्रबोध्य राजा प्रभुभिर्मद्यमांसादिसप्तव्यसननियमं ग्राहितः, सम्यक्त्वमूलैकादशव्रतनिरतश्च श्रावकः कृतः। द्वादशं व्रतं चातिथिसंविभागरूपं प्रथमचरमजिननृपाणां निषिद्धं सिद्धान्ते ॥

एकदा लक्षणावत्यां बौद्धो वर्धनकुञ्जरो धर्मनृपमाह सगद्गदम्—अहं बप्पभट्टिना जितस्तन्मे न दूषणम्। बप्पभट्टिर्हि भारती नररूपा प्रज्ञामयपिण्डः गीःपुत्रः, तन्न दुनोति, तत् तु दुनोति यत् तव सभ्येनासौ वाक्पतिराजेन सूरिकृतभेदात् मम मुखशौचोपायेन गुटीं हारयामास। एतावदभिधाय स तारं तारं रुरोद, स निवारितः क्ष्मापेन रोदनात्। उक्तं च येन नश्चिरसेवकोऽनेकसमराङ्गणलब्धजयप्रतिष्ठो महाप्रबन्धकविः पराभवितुं न रोचते। क्षमस्वेदमस्यागः। ततो बौद्धो जोषं स्थितः ॥

इतरेद्युर्यशोधर्मनाम्ना समीपदेशस्थेन बलवता भूपेन लक्षणावतीमेत्य रणे धर्मनृपो व्यापादितः, राज्यं जगृहे। वाक्पतिरपि बन्दीकृतः। तेन कारागृहस्थेन गौडवधसंज्ञं प्राकृतं महाकाव्यं रचयित्वा यशोधर्माय राजेन्द्राय दर्शितम्। तेन गुणविशेषविदा ससत्कारं बन्दिर्मुक्तः क्षमितश्च (यतः) "विद्वान् सर्वत्र पूज्यते"। ततो वाक्पतिर्बप्पभट्टिसमीपं गतः।

द्वयोस्तयोर्मैत्री पूर्वमेवासीत्, तदानीं विशेषतोऽवृधत् । तेन वाक्पतिना सह महविजयाख्यं प्राकृतं महाकाव्यं बद्धम्, आमाय दर्शितम् । आमो हैमटङ्ककं लक्षमस्मै व्य(शि)श्रियत् ।

"कियती पञ्चसहस्री, कियती लक्षा च कोटिरपि कियती ? ।
औदार्योन्नतमनसां, रत्नवती वसुमती कियती ? ॥ १ ॥"–आर्या

अपरेद्युः प्रभुः श्रीआमेन पृष्टः–भगवन् ! यूयं विद्यया तपसा च लोके लब्धपरमलेखाः, किमन्योऽपि कोऽपि क्वाप्यास्ते यो भवतस्तुलालेशमवाप्नोति ? । बप्पभट्टिरभाणीत्–अवनिपते ! मम गुरुबान्धवौ गोविन्दाचार्यनन्नसूरी सर्वैर्गुणैर्मदधिकौ गुर्जरधरायां, (श्रुत्वा राजा तत्र सूरिपार्श्वे गतः प्रच्छन्नः, सूरिश्च प्रसंगागतान्) कामाक्तान् रागवादान् पल्लवयन्नासीत् । राज्ञा श्रुतं तत् सर्वं, अरुचिरुत्पन्ना । अहो ! वयं कामिनोऽपि नैतान् भावान् विद्मः, अयं तु वेत्ति सम्यक्, तस्मादवश्यं नित्यं योषित्सङ्गी, किमस्य प्रणामेन ? । अकृतनतिरेव उत्थाय राजा गोपगिरिमगात् । चिराद् दृष्टः क्ष्माप इति रणरणकाक्रान्तस्वान्ता गुरवो वन्दापयितुमैयरुः । राजा निरादरो न वन्दते तथा । एवं कतिपयानि दिनानि गतानि । एकदा गुरुभिः पप्रच्छे–राजन् ! यथा पुराऽभूस्त्वं तथेदानीं भक्तो नासि, किमस्माकं दोषः कोऽपि ? । राजा स्माह–सूरिवर ! भवादृशा अपि कुपात्रश्लाघां कुर्वते, किमुच्यते ? । सूरिरूचे–कथम् ? आमः प्राह—यौ भवद्भिः स्वौ गुरुबान्धवौ स्तुतौ तत्र गत्वा एको नन्नसूरिनामा दृष्टः शृङ्गारकथाव्याख्यानलम्पटस्तपोहीनो लोहतरण्डतुल्यो मज्जयति च भवाब्धौ, तस्मान्न किञ्चिदेतत् । सूरयो मषीमलिनवदनाः स्वां वसतिमगुः । तत्रोपविश्य द्वौ साधू मोढेर(क)पुरं प्रहितौ तत्पार्श्वे, तत्र कथापितम्–आमः अकृतप्रणामो भवत्पार्श्वादागतः, एवमेवं युवां निन्दति, तत् कर्तव्यं येनासौ भवत्स्वन्येष्वपि श्रवणेष्ववज्ञावान्न जायेत । सर्वं तत्रत्यं ज्ञात्वा तौ द्वावपि गुटिकया वर्णस्वरपरावर्तं कृत्वा वेषधरौ गोपगिरिमीयतुः । श्रीऋषभध्वजप्रबन्धनाटकं नवं बबन्धतुः । नटान् शिक्षयामासतुः । आमराजं अवसरं ययाचतुः । राज्ञा अवसरो दत्तः । मिलिताः सामाजिकाः तत्र तद्रसभावज्ञाः । ताभ्यां तन्नाटकं दर्शयितुमारेभे । भरतबाहुबलिसमरावसरोऽभिधीयते, तदा व्यूहरचनाशस्त्रड(झ?)लकारवीरवर्णनाभट्टकोलाहलाश्वोत्थापनझलरिझणझणत्कारादि ताभ्यां वर्णितुमारब्धं धारारूढश्च रसोऽवातारीत्, अत्रान्तरे नन्नसूरिगोविन्दाचार्यौ स्वरूपमुद्रे प्रकाश्य आहतुः—राजन् ! भट्टा भट्टाः ! शृणुत कथायुद्धमिदं, न तु साक्षात्, अलं सम्भ्रमेण, इत्युक्त्वा लज्जिता विस्मिताश्च ते राजाद्याः संवृत्याकारमस्थुः ।

---

१ 'मद्दमहीविज०' इति पाठः प्रभावक-चरित्रे (पृ० १६१) ।

२ तस्य वर्णनं प्रभावक-चरित्रे (पृ० १६२)—

"तत्रानैकमनीभूय, चकर्ष क्षुरिकां निजाम् ।
मारिमारीति शब्देन, नदन् सिंह इव क्रुधा ॥ १ ॥"

तदा गोविन्दाचार्येणनन्नसूरिभ्यां भूयोऽप्यभाणि–किल शृङ्गारानुभविनो वयं इति ते सम्यक् व्याख्यातुं विद्मः, किं समराजिरमपि भवद्वत् प्रविष्टाः स्मः? कुरङ्गा इव शस्त्रे दृष्टेऽपि विभिमः, आबाल्याद् गृहीतव्रताः परे भीरवः स्मः, परं भारतीप्रभाववचनशस्त्रवा रसान् सर्वान् जीवद्रू(पा)निव दर्शयामः। मोढेरके ये ते वात्स्यायनभावव्याख्याता(र): ते वयं नन्नसूरयः, इमे च गोविन्दाचार्याः, भवतां तदा मृषा विकल्पः समजनि। राजा सद्यो ललज्जे, तौ सूरी क्षमयामास, आनर्च वप्पभट्टिं च। तौ कतिचिद् दिनानि उपराजं स्थित्वा वप्पभट्ट्यनुज्ञया पुनर्मोढेरकपुरमगाताम्। गतः समयः कियानपि ॥

अन्यदा गाथकवृन्दमागतं तन्मध्ये बालिकैका सतालं नीलोत्पललोचना मृगाङ्कमुखी किन्नरस्वरा विदुषी गायति। तां दृष्ट्वा मदनशरजर्ज(रः स)रोत्कटज्वरो गलितविवेको गतप्रायशौचधर्माभिनिवेशः कान्यकुब्जेशः पद्यद्वयं प्रभुप्रत्यक्षमपाठीत्—

"वक्त्रं पूर्णशशी सुधाऽधरलता दन्ता मणिश्रेणयः
कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः।
वाणी कामदुघा कटाक्षलहरी सा कालकूटच्छटा[1]
तत् किं चन्द्रमुखि! त्वदर्थममरैरामन्थि दुग्धाम्बुधिः[2]? ॥१॥–शार्दूल०

जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो
दूरे शोभा वपुषि निहिता पङ्कशङ्कां तनोति।
विश्वप्रार्थ्यः सकलसुरभिद्रव्यगर्वापहारी
नो जानीमः परिमलगुणो वस्तुकस्तूरिकायाः[3] ॥ २ ॥"–मन्दाक्रान्ता

सूरिभिश्चिन्तितम्–अहो! महतामपि कीदृग् मतिविपर्यासः—

"भस्त्रा काचन भूरिरन्ध्रविगलत्तत्तन्मलक्लेदिनी
सा संस्कारशतैः क्षणार्धमधुरां बाह्यामुपैति द्युतिम्।
अन्तस्तत्त्वरसोर्मिधौतमतयोऽप्येतां तु कान्ताधियाऽऽ-
श्लिष्यन्ति स्तवने[4] नमन्ति चतुराः कस्यात्र पूत्कुर्महे? ॥ १ ॥"–शार्दूल०

उत्थिता च सभा। त्रिभिर्दिनैर्भूपेन पुर्या बहिः सौधं कारितं मातङ्गीसहितोऽत्र वत्स्यामि इति धिया। तदवगतं वप्पभट्टिसूरिभिः। ध्यानप्रत्यक्षं हि तेषां जगद्वृत्तम्। ततोऽसौ कुकर्मणा नरकं मा यासीदिति कृपया तैर्निष्पद्यमाने सौधे भारपट्टे निशि खटिकया बोधिदानि पद्यानि लिखितानि। यथा—

---

१ 'तत् कालकूटं विषं' इति पाठः प्रभावक-चरित्रे (पृ० १६४)।

२ 'दुग्धोदधिः' इति प्रभावक-चरित्र-पाठः।

३ 'कस्तु कस्तू०' इति पाठ उपदेश-रत्नाकरे (पत्रं ५७)।

४ 'स्तुवते' इति उपदेश-रत्नाकर-पाठः।

"शौचं([1]शैत्यं) नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां [2]भवन्त्य(न्ति)शुचयः सङ्गेन यस्यापरे ।
कि[3]ञ्चातः परमुच्यते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः! कस्त्वां निरोद्धुं[4] क्षमः? ॥ १ ॥–शार्दूल०

सद्वृत्तसद्गुणमहार्घ्यमहार्हकान्त!
कान्ताघनस्तनतटोचितचारुमूर्ते[5]! ।
आः पामरीकठिनकण्ठविलग्नभग्न!
हा हार! हारितमहो भवता गुणित्वम् ॥ २ ॥–वसन्ततिलका

[6]मायंगीसत्तमणसस्स मेयणी तहय भुञ्जमाणस्स ।
आभिडइ तुज्झ नायावलोक! य को भट्ठधम्मस्स? ॥ ३ ॥–आर्या
उप्पहजायाइ असोहई य फलपुप्फपत्तरहियाए ।
बोरीइ पयं दिंतो भो भो पामर! हसिज्जहसे ॥ ४ ॥
जीयं जलविन्दुसमं, संपत्तीओ तरंगलोलाओ ।
सुमिणयसमं च पिम्मं, जं जाणह तं करिज्जासु ॥ ५ ॥
लज्जिज्जइ जेण जणे, मयलिज्जइ नियकुलक्कमो जेण ।
कंठट्ठिएवि जीवे, न हु तं कारिंति सप्पुरिसा ॥ ६ ॥"[7]

प्रातरमूनि पद्यानि स्वयं आमो ददर्श, वर्णान् कवित्वगतिं चोपलक्षयामास । अहो! गुरूणां मयि कृपा। अहो मम पापाभिमुखतेति ललज्ज, दध्यौ च सांकल्पिकं मद(ह)ज्जनं-गमीसंगमास्पदं पापं मयाऽऽचरितम्-। भारितोऽहं, क्व यामि? करोमि किं? कथं गुरोर्मुखं दर्शयामि? किं किं तपः समाचरासि? किं तीर्थं सेवे? ऊर्ध्वमुखं गृहीत्वा गच्छामि, शस्त्रे-

---

१ 'शैत्यं' इति प्रभावक-चरित्रे । २ 'व्रजन्ति शुचय.' इति पाठ प्रभावक-चरित्रे, उपदेश-रत्नाकरे तु 'भवन्ति शुचयस्त्वत्सङ्गताऽन्ये यत.' इति पाठ । ३ 'किं वाऽत. परमस्ति ते' इति पाठ. प्रभावक-चरित्रे । ४ 'निषेद्धुं' इति पाठः प्रभावक-चरित्रे । ५ 'मूर्ति.' इति पाठस्तु प्रभावक-चरित्रे ।

६ छाया—

मातङ्गीसक्तमनसो मेदनीं तथा च भुञ्जमानस्य ।
आभ्रश्यते तव 'नागावलोक!' च को भ्रष्टधर्मस्य? ॥ ३ ॥
उत्पथजाताया अशोभन्त्याश्च फलपुष्परहितायाः ।
बदर्याः पदं ददानो भो भो पामर! हसिष्यसे ॥ ४ ॥
जीवितं जलबिन्दुसमं, सम्पत्तयस्तरङ्गलोलाः ।
स्वप्नसमं च प्रेम, यत् जानासि तथा कुरु ॥ ५ ॥
लज्यते येन जने, मलिनीक्रियते निजकुलक्रमो येन ।
कण्ठस्थितेऽपि जीवे, न हि तत् कुर्वन्ति सत्पुरुषा ॥ ६ ॥

७ इदं पद्यषट्कं प्रभावक-चरित्रे श्रीवप्पभट्टिप्रबन्धे दृश्यते, परन्तु तत्र तृतीयचतुर्थयोः पद्ययोर्विनिमयः पाठान्तरभिन्नता च ।

णात्मानं घातयामि। एवं तु(टल?)वलायमानोऽनुचरानादिदेश—अग्निं प्रगुणयत। प्रगुणित-स्तैरग्निः। समागताः श्रीबप्पभट्टिसूरयः। मिलितं चातुर्वर्ण्यम्, उक्तं तदघम्। यावत् सहसा कृशानुं प्रविशत्यामस्तावद् बाहू धृत्वा सूरिभिरुक्तः—राजन्! शुद्धोऽसि, मा स्म खिद्येथाः। त्वया हि संकल्पमात्रेण तत् पापं कृतं न साक्षात्, संकल्पेनाग्निमपि प्रविष्टोऽसि, चिरं धर्मं कुरु।

"मनसा मानसं कर्म, वचसा वाचिकं तथा।
कायेन कायिकं कर्म, निस्तरन्ति मनीषिणः॥ १॥"—अनु०

इति वचनात्। विसृष्टोऽग्निः। जीवितो राजा। तुष्टो लोकः। प्रीतः सूरिः॥

समयान्तरे वाक्पतिराजो मथुरां ययौ। तत्र श्रीपादस्त्रिदण्डी जज्ञे, स तल्लोका-दवगम्य आमः सूरीन् बभाषे—भवद्भिरहमपि श्रावकः कृतः। दिव्या वाणी वः प्रसन्नैव। जानामि वः शक्तिं परेषां(रमां?) यदि वाक्पतिमपि आर्हतीं दीक्षां ग्राहयथाः। आचार्यैः प्र-तिज्ञा चक्रे—तदा मे विद्या प्रमाणं यदि वाक्पतिं स्वशिष्यं श्वेताम्बरं कुर्वे। वाक्पतिस्तु क्वा-स्तीत्युच्यताम्, राज्ञोक्तम्—मथुरायां विद्यते। सूरयो मथुरायां गता बहुभिः श्रीआमास-नरैः सह, वराहमिहिराख्ये प्रासादे ध्यानस्थं वाक्पतिमद्राक्षुः। गत्वा तत्पृष्ठस्थैः सूरिभि-र्भूरिस्वरेण आशीर्वादाः पठितुमारेभिरे—

"सन्ध्यां यत् प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च नदीं विलज्ज! शिरसा तच्चापि सोढं मया।
श्रीर्जाताऽम्बुधिमन्थने[1] यदि हरेः कस्माद् विषं भक्षितं?
मा स्त्रीलम्पट! मा स्पृशेत्यभिहितो गौर्या हरः पातु वः॥१॥—शार्दूल०

एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम्।
अन्यद् दूरविकृष्टकामदहनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः॥ २॥—शार्दूल०

रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु-
र्वाचा पञ्चवटीवने विचरतस्तस्याहरद् रावणः।
निद्रार्थं जननीकथामिति हरेर्हुंकारिणः शृण्वतः
पूर्वं सर्तुरवन्तु कोपकुटिलभ्रूभङ्गुरा दृष्टयः॥ ३॥—शार्दूल०

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन घृ(कृ)त्वा
कृ(धृ)त्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः।
सद्यस्तत्कायकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥ ४॥"—स्रग्धरा

---

1 'ताऽमृतमन्थने' इति पाठः प्रभावक-चरित्रे (पृ० १६७)।

एवं बहु पेठे। वाक्पतिर्ध्यानं विसृज्य संमुखीभूय सूरीनाह–हे बप्पभट्टिमिश्राः! यूयं किमस्मत्पुरः श्रृङ्गाररौद्राङ्गं पद्यपाठं कुरुध्वम्? । बप्पभट्टयः प्राहुः । भवन्तः (सांख्याः)

"सांख्या निरीश्वराः केचित्, केचिदीश्वरदेवताः ।
सर्वेषामपि तेषां स्यात्, तत्त्वानां पञ्चविंशतिः ॥ १ ॥"–अनु०

इति ज्ञात्वा त्वदभिमतदेवाशिषः पठन्तः स्म, (अपरञ्च) बप्पभट्टयो जगदुः–किं तर्हि रुद्रादयो मुक्तिदातारो न भवन्तीति मनुध्वे? वाक्पतिः प्राह–एवं संभाव्यते, बप्पभट्टयो बभाषिरे–यो मुक्तिदानक्षमस्तं श्रृणु पठामि—

"मदेन मानेन मनोभवेन
क्रोधेन लोभेन च संमदेन ।
पराजितानां प्रसभं सुराणां
वृथैव साम्राज्यरुजा परेषाम् ॥ १ ॥–उपजातिः

(अयोगव्यवच्छेदद्वात्रिंशिकायां श्लो० २५)

जं दिट्ठी करुणातरंगियपु(फु)डा एयस्स सोमं(म्मं) मुहं
आयारो पसमायरो परियरो सन्तो पसन्ना तणू ।
तं मन्ने जरजम्मनिज्जरहरो (मच्चुहरणो) देवाहिदेवो जिणो
देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ २ ॥"–शार्दूल०

इत्यादि बहु पेठे । वाक्पतिराह–स जिनः क्वास्ते? । सूरिः–स्वरूपतो मुक्तौ, मूर्ति(त)स्तु जिनायतने । वाक्पतिर्ब्रूते–प्रभो! दर्शय । ततः प्रभुरपि आमनरेन्द्रकारितप्रासादे तं निनाय, स्वयं प्रतिष्ठितं श्रीपार्श्वनाथमदीदृशत् । शान्तं कान्तं निरञ्जनरूपं दृष्ट्वा प्रबुद्धो बभाण–"अयं निरञ्जनो देव आकारेणैव लक्ष्यते" । तदा बप्पभट्टिसूरिभिर्देवगुरुधर्मतत्त्वान्युक्तानि । रञ्जितः स मिथ्यात्वविषमुत्सृज्य जैनर्षिः श्वेताम्बरोऽभवत्, जिनमवन्दिष्ट, अपाठीच्च—

"मैयनाहिसुरहिएणं, इमिणा किंकरफलं नडाले णं ।
इच्छामि अहं जिणवर!, पणाम किण कलुसियं काउं? ॥ १ ॥–आर्या

---

१ भवन्तः सांख्या इति भवदभिमतदेवाशिषः पठन्तः स्मः, यथारुचि हि श्रोतुः पुरः पठनीयं, वाक्पतिः–यद्यप्येवं तथापि मुमुक्षवो वयमासन्नं निधनं ज्ञात्वा इह परमब्रह्मध्यातुमायाताः स्म, इति उपदेशरत्नाकरे (पत्रं ५९)

२ छाया—

यद् दृष्टिः करुणातरङ्गितपु(स्फु)टा एतस्य सौम्यं मुखम्
आकारः प्रशमाकरः परिकरः शान्तः प्रसन्ना तनूः ।
तद् मन्ये जराजन्मनिर्जरहरः (मृत्युहरणः) देवाधिदेवो जिनो
देवानामपरेषां दृश्यते यतो नैतत् स्वरूपं जगति ॥

३ छाया—

मृगनाभिसुरभितेन अनेन किङ्करफलं ललाटे ।
इच्छामि अहं जिनवर! प्रणामं कथं कलुषितं कर्तुम्? ॥

दोवि गिहत्था धडहड, वच्चइ को किर कस्सवि पत्त भणिज्जइ ? ।
सारंभे सारंभं पुज्जइ, कद्दम कद्दमेण किमु सुज्भ(ज्झ)इ ? ॥ २ ॥"–आर्या

अत्यासन्ने आयुषि मथुराचातुर्वर्ण्यस्य आप्तनृपसचिवलोकस्य च प्रत्यक्षं अष्टादश पापस्थानानि त्याजितो नमस्कारं पञ्चपरमेष्ठिमयं श्रावितो जीवेषु क्षामणां कारितो वाक्पतिः सुखेन त्यक्ततनुर्दिवमगमत् । तत् सर्वं प्रधानैरपि अन्यैरपि प्रथमं ज्ञापितो नृपः, पश्चाद् बप्पभट्टिर्गोपगिरिं गतः । राजा तुष्टुवे । सूरिभिरुक्तम्—

"आलोकवन्तः सन्त्येव, भूयांसो भास्करादयः ।
कलावानेव तुङ्गाद्रा–वर्ककर्मणि कर्मठः ॥ १ ॥"–अनु०

एकदा च राज्ञा सूरिः पृष्टः–किं कारणं येनाहं ज्ञातजैनतत्त्वोऽप्यन्तरान्तरा तापसधर्मे रतिं बध्नामि । सूरिराह–प्रातर्वक्ष्यामः, प्रातरायाताः प्रोचुः–राजन् ! अस्माभिः भारतीवचसा प्राग्भवो ज्ञातः, त्वं कालिञ्जरगिरेस्तीरे शालिनामा तपस्वी शालद्रुमाधोभागे द्व्युपवासान्तरितभोजनरूपो बहूनि वर्षाणि तस्थौ । स मृत्वा त्वमुत्पन्नः, तस्यातिदीर्घतरा जटास्तत्रैव लतान्तरिता अद्यापि सन्ति । तदाकर्ण्य स्वनरास्तत्र प्रहिता राज्ञा, तैर्जटा आनीताः । सूरिवाक्संवादो दृष्टः, भूपतिः सूरीणां पादौ विलग्य तस्थौ, परमार्हतो बभूव ॥

अन्यदा सौधोपरितलस्थेनाम्रेन क्वापि गृहे भिक्षार्थं प्रविष्टो मुनिर्दृष्टः । तत्र युवतिरेका कामार्ता गृहागतं मुनिं परब्रह्मैकचित्तं रिरमयिषुः कपाटसंपुटं ददौ ( बहुप्रार्थनेऽपि न क्षुब्धस्तदा नूपुरे तत्पदोर्वबन्ध, तद् दृष्ट्वा सूरये समस्या दत्ता )—

"कैमाडसासज्ज ( कामाउराएऽज्ज ) वरंगणाए, अब्भत्थिओ जुव्वणगव्वियाए ।"

सूरि पुरः प्राह—

"न मन्नियं तेण जिइंदिएणं, सनेउरो पव्वइयस्स पाओ ॥ १ ॥"–उप०

अन्यदिने प्रोषितभर्तृकाया गृहे भिक्षुः कश्चिद् भिक्षार्थी प्रविष्टः । राज्ञा सौधाग्रस्थेन दृष्टः, तया भिक्षोः पारणायान्नमानीतं उपरि काकैर्भक्षितम् । मुनिकस्य दृष्टिस्तस्या नाभौ स्थिता, तस्यास्तु दृष्टिस्तन्मुखकमले स्थिता । आमः सूरये समस्यामार्पयत्—

"भिक्खारो पिच्छइ नाहिमण्डलं सावि तस्स मुहकमलं"

---

१ छाया—

द्वावपि गृहस्थौ निरपेक्षौ व्रजतः कः किल कस्यापि पात्रं भण्यते ? ।
सारम्भः सारम्भं पूजयति कर्दमः कर्दमेन किं शुध्यते ? ॥

२ छाया—

कामातुरयाऽद्य वराङ्गनयाऽभ्यर्थितो यौवनगर्वितया ।
न मतं तेन जितेन्द्रियेण, सनूपुरः प्रव्रजितस्य पादः ॥

३ छाया—

भिक्षाचरः पश्यति नाभिमण्डलं साऽपि तस्य मुखकमलम् ।

सूरिराह—

"दुण्हंपि कवालचडुयं च काया विलुम्पंति ॥ १ ॥"

इति। आमः श्रुत्वा चमत्कृतः। अहो! सर्वज्ञपुत्रका एते ॥

अन्यदा कोऽपि चित्रकृद् भूपरूपं लिखित्वोपभूपं गतः। बप्पभट्टिना श्लाघिता तत्कला। नृपात् तेन टङ्ककलक्षं लेभे। लेप्यमयविम्बचतुष्टयं कारितम्। एकं मथुरायां एकं मोढेरकवसतिकायां [अणहिलपुरे] एकं गोपगिरौ एकं सतारकाख्यपुरे। तत्र तत्र प्रतिष्ठाभावनाः कारिताः। अन्यदपि बहुकारि ॥

अथामगृहे पुत्रो जातः सुलक्षणः। सोत्सवं तस्य डुन्दुक इति नाम प्रतिष्ठितम्। सोऽपि युवत्वे तैस्तैर्गुणैः पप्रथे। एकदा समुद्रसेनभूपाधिष्ठितं राजगिरिनामकं दुर्गं आमो रुरोध। अमितं सैन्यं कुद्दालादिसामग्री भैरवादयो यन्त्रभेदाः कृताः। प्राकारोऽतिबलेन प्रपातयितुमारेभे, नापतत्। आमः खिन्नः, तेन सूरयः पृष्टाः। अयमभ्रंलिहः प्राकारः कदाऽस्माभिर्गृहीष्यते? । सूरिर्बभाण–तव पुत्रपुत्रो भोजनामा अमुं प्राकारं दृक्पातमात्रेण पातयिष्यति, अन्यो नैव। आमस्त्यक्तारम्भः प्राकाराद् बहिर्द्वादशाब्दीमस्थात्। शत्रुदेशमात्मसाच्चक्रे। डुन्दुकगृहे पुत्रो जातस्तस्य भोज इति नाम ददौ। स जातमात्रो पर्यङ्किकान्यस्तो दुर्गद्वाराग्रमानीतः प्रधानैः, तद्दृक्प्रपातमात्रेण प्राकारः खण्डशो विशीर्णः। समुद्रसेनभूपो धर्मद्वारेण निःसृतः। आमो राजगिरिमविशत्, प्रजाभारे नारोपितः। अक्रूरा हि जैनराजर्षयः दयापरास्ते, रात्रौ आमाय राजगिर्यधिष्ठायकेन आभणितम्—राजन्! यदि त्वमत्र स्थास्यसि तदा तव लोकं हनिष्यामि। आमः प्रत्यूचे–लोकेन हतेन किं ते फलं? यदि हनिष्यसि तदा मामेव घातय। एतन्निर्भयमामवचः श्रुत्वा तुष्टो व्यन्तर उवाच-प्रीतोऽस्मि ते सत्त्वेन, याचस्व किंचित्, राज्ञोचे–न किमपि न्यूनं, केवलं कदा मे मृत्युः? ब्रूहीदम्। व्यन्तर उवाच—षण्मासावशेषे आयुषि वक्ष्यामि, पुनरायथौ सः, राज्ञोक्तं कियन्मे आयुः, व्यन्तरो वदति–देव!

"गङ्गान्तर्मागधे तीर्थे, नावा वै तरतः सतः।
मकाराद्यक्षरग्रामो–पकण्ठे मृत्युरस्ति ते ॥ १ ॥"–अनु०

षण्मासान्त इति विद्याः, पानीयान्निर्गच्छन्तं धूमं यदा द्रक्ष्यसि तदा मृत्युर्ज्ञातव्यः। साधना च कार्या पारलौकिकी इति गदित्वा ततो देवो गतः। राजा प्रातः सूरिपार्श्वं गतः। सूरिरुवाच–राजन्! यद् व्यन्तरेण तवाग्रे कथितं आयुःप्रमाणं तत् तथैव, धर्मपाथेयं गृह्णीयाः। तदाकर्ण्य भूपस्तुतोष विसिष्मिये च। अहो ज्ञानमथवा विस्मयः एव कः? शूरः तेजस्वी, इन्दुराह्लादकः, गङ्गाम्भः पावनं, जैना ज्ञानिन इति ॥

दिनद्वये गते सूरिः श्रीआमस्य पुरः प्रसङ्गेन श्रीनेमिनाथस्याशीर्वादं पपाठ—

---

१ छाया—

द्वयोरपि कपालचाटुकं च काका विलुम्पन्ति ॥

"लावण्यामृतसारसारणिसमा सा भोगभूः स्नेहला
सा लक्ष्मीः स नवोद्गमस्तरुणिमा सा द्वारिका तज्जलम् ।
ते गोविन्द-शिवा-समुद्रविजयप्रायाः प्रियाः प्रेरकाः
यो जीवेषु कृपानिधिर्व्यधित नोद्वाहः स नेमिः श्रियै ॥ १ ॥-शार्दूल०

भूयः—

मग्नैः कुटुम्बजम्बाले, यैर्मिथ्याकार्यजर्जरैः ।
नोज्जयन्ते नतो नेमि-स्ते चेज्जीवन्ति के मृताः? ॥ २ ॥"-अनु०

रैवतकतीर्थमहिमा सूरिभिर्व्याख्याय तथा पल्लवितो यथा भूमिमाहत्योत्थाय परिकरं बद्ध्वा सरभसं भूपः प्रतिशुश्राव- रैवतके नेमिमवन्दित्वा मया न भोक्तव्यं इति, लोकैर्निषिद्धः, मा मा, दूरे रैवतको गिरिः, मृदवो भवादृशाः । राजाऽऽह-प्रतिज्ञातं मे न चलति । ततः सह सूरिणा आमः सारसैन्यो रैवतकायाचालीत् । स स्तम्भतीर्थं यावद् गतः तत्र हृत्तापेन व्याकुलितोऽपि प्राणसन्देहं प्राप्तोऽपि नाहारमग्रहीत् । भीतो लोकः खिन्नः सूरिः, मन्त्रशक्त्या कूष्माण्डीं शक्तिं साक्षादानिनाय, तदग्रे कथयामास-तत् कुरु येन राजा जेमति जीवति । तद्वचनात् कूष्माण्डी बिम्बमेकं महत् शिरसा बिभ्रती गगनेनामसविधं गता । ऊचे च- वत्स ! अहमम्बिका तव सत्त्वेन तुष्टा । गगने आगच्छन्तीं मां त्वं साक्षाद्द्राक्षीः, मयेदं रैवतकदेशभूतदेवलोकशिखरान्नेमिनाथबिम्बमानीतं, इदं वन्दस्व, अस्मिन् वन्दिते मूलनेमिः वन्दित एवेति कुरु पारणकम् । सूरिभिरपि तत् समर्थितम्, लोकेन स्थापितं तद् बिम्बं वन्दित्वा राज्ञा ग्रासग्रहणं (कृतम्) । अद्यापि तद् बिम्बं स्तम्भतीर्थे पूज्यते । उज्जयन्त इति प्रसिद्धं तत् तीर्थं, हृद्यातोद्यानि ध्वानयन्नामो विमलगिरिं ऋषभध्वजं सोत्साहो वन्दित्वा यावद् रैवताद्रिं गतः तावत् तीर्थं दिगम्बरै रुद्धम्, श्वेताम्बरसङ्घः प्रवेष्टुं न लभते । आमेन तत् ज्ञात्वा ऊचे-युद्धं कृत्वा निष्पटान् हत्वा नेमिं नमिष्यामि, तावत् तद्दिगम्बरभक्ता एकादश राजानस्तत्र मिलिताः, सर्वे युद्धैकतानाः । तदा बप्पभट्टिः-स्थिरैः स्थेयं, एवं भूपं प्रतिबोध्य बप्पभट्टिरुपदिगम्बरं उपतद्भूपं च नरं प्रहित्यावभाण-इदं तीर्थं सद्योऽम्बिका दत्ते यस्य तस्य पक्षस्य सत्कमिति मन्ये, तैरुक्तं-युक्तं युक्तमेतत् । ततो बप्पभट्टिना सुराष्ट्रवास्तव्यानां श्वेताम्बरीयाणां दिगम्बरीयाणां च श्रावकाणां शतशः कन्या मेलिताः पञ्चसप्तवार्षिकाः, मिलिताः सभ्याः, बप्पभट्टिना अम्बादेवीपार्श्वात् कथापितं-यदि सर्वाः श्वेताम्बरश्रावककन्यका "उंज्जिन्तसेलसिहरे" इति गाथां पठिष्यन्ति तदा श्वेताम्बरीयं तीर्थं, पक्षान्तरे तु दैगम्बरीयं इति । तद् आनीता श्वेताम्बरबालिकाः, सर्वाभिः श्वेताम्बरपक्षश्रावकबालिकाभिः पठिता सा गाथा, अपरासु तु नैकयाऽपि; ततो जातं श्वेताम्बरसाद् रैवतकं तीर्थम् । अम्बिकया खस्थया पुष्पवृष्टिः श्वेताम्बरेषु कृता । ततो दिक्पटा नंष्ट्वा महाराष्ट्रादिदक्षिणदेशान्गमन् । राज्ञाऽन्यैरपि सर्वसङ्घैश्चिरात् तत्र मिलितैर्नेमिस्तत्र नेमे,

१ अम्बिकेत्यपरनाम्नी देवी । २ उज्जयन्तशैलशिखरे ।

वित्तं ददे, प्रभासे चन्द्रप्रभः प्रणेमे, बन्दिमोक्षः सर्वत्रापि कारितः, आमस्य भुक्तौ तदा गुर्जरादिदेशाः, तीर्थादीनां चिरं पूजोपयोगिनो हृदा(हट्टा?)घाघाटाः प्रक्लृप्ताः। एवं कार्याणि कृत्वा सूरिनृपौ गोपगिरिं प्राविशताम्। सङ्घपूजादिमहास्तत्र नवनवाः। प्राप्तप्राये काले दुन्दुको राज्ये प्रतिष्ठितः, आपृष्टः सः, लोकोऽपि क्षमितः, अनृणो देशः कृतः। सह सूरिणा नावारूढो गङ्गासरित्तीरे तीर्थं मागधं गतः। तत्र जले धूमं दृष्टवान् तदा सूरीन्द्रं क्षमयन् संसारमसारं विदन्ननशनमगृह्णीत समाधिस्थः। श्रीविक्रमकालाद् अष्टशतवर्षेषु नवत्यधिकेषु व्यतीतेषु भाद्रपदशुक्लपञ्चम्यां पञ्चपरमेष्ठिनः स्मरन् राजा दिवमध्यष्ठात्। सूरयस्तत्त्वज्ञा अपि तदा रुरुदुः। चिरप्रीतिमोहो दुर्जय एव। सेवकास्तु चक्रन्दुः—हा शरणागतरक्षावज्रकुमार! हा राजस्थापनादाशरथे! हा अश्वदमननल! हा सत्यवाग्युधिष्ठिर! हा महा-(हेम)दानकर्ण! हा मज्जज्जैनतत्त्वश्रेणिक! हा सूरिसेवासम्प्रते! हा अनृणीकरणविक्रमादित्य! हा वीरविद्यासातवाहन! अस्मान् विहाय क्व गतोऽसि? दर्शयैकदाऽऽत्मानं, मैकाकिनो मुञ्च। एवं विलपन्तस्ते सूरिभिः प्रतिबोधिताः—भो भो सत्यं दैवेन पापेन

"आलब्धा कामधेनुः सरसकिसलयश्चान्दनश्चूर्णितो हा
छिन्नो मन्दारशाखी फलकुसुमभृतः खण्डितः कल्पवृक्षः।
दग्धः कर्पूरखण्डो घनहतिदलिता मेघमाणिक्यमाला
भिन्नः कुम्भः सुधायाः कमलकुवलयैः केलिहोमः कृतोऽयम्॥१॥"—स्रग्०

तथा मा शोचत शोचत, यतः—

"पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सृज्य नैशं तमः
कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा।
मध्याह्ने सरितां जलं प्रसृमरैरापीय दीप्तैः करैः
सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत्?॥ १ ॥"—शार्दूल०

इति लोकं निःशोकं कृत्वा लोकेन सह सूरिर्गोपगिरिमगात्।

सूरिभिः दुन्दुको नाम राजा आमशोकेन जात्यमुक्ताफलस्थूलानि अश्रूणि समुद्गिरन् हिमम्लानदीनवदनः समुल्लसच्चिन्ताचान्तस्वान्तो बभाषे—राजन्! कोऽयं महतस्तव पितृशोकः? स हि चतुर्वर्गं संसाध्य कृतकृत्यो बभूव, यशोमयेन देहेन च आचन्द्रार्कं जीवन्नेव(आस्ते)। सुपुण्यलक्ष्मीकीर्तिलक्ष्म्यौ चेति द्वे नरस्योपकारिण्यौ वल्लभे।

"पुण्यलक्ष्म्याश्च कीर्तेश्च, विचारयत चारुताम्।
स्वामिना सह यात्येका, परा तिष्ठति पृष्ठतः॥ १ ॥"—अनु०

अन्योऽपि कोऽप्येवंविधो भवतु इत्येवंविधाभिर्वाग्भिर्दुन्दुकराजं सूरिराजो निशोकमकार्षीत्। दुन्दुकः शनैः शनैः परमार्हतोऽभूत्। राजकार्याण्यकार्षीत्। त्रिवर्गं समासेविष्ट। एवं वर्तमाने काले दुन्दुकश्चतुष्पथेऽगच्छत्, कण्टिकां नाम गणिकामुदाररूपां [चिद्रूपां]

युवजनमृगवागुरां मदनमायामयीमालोकिष्ट, तां शुद्धान्तस्त्रीमकार्षीत्। तया दुन्दुकस्तथा वशीकृतो यथा यदेव सा वदति तत् सत्यम्, यदेव सा करोति तदेव हितं मनुते। सा तु कार्मणकारिणी वाक्पटुः सर्वं राज्यं ग्रसति हिमानीव चित्रं, भोजमातरं पद्मां नाम अन्या अपि राज्ञीरन्वयवतीर्विनयवतीर्लावण्यवतीस्तृणाय मनुते ॥

एकदा कलाकेलिर्नाम ज्योतिषिको निशि विसृष्टे सेवकजने दुन्दुकराज्यं विजनं दृष्ट्वाऽवादीत्–देव! वयं भवत्सेवकत्वेन सुखिनः श्रीशाः, अतो यथातथं ब्रूमः। अयं ते भोजनामा तनयो भाग्याधिकस्त्वां हत्वा तव राज्ये निवेक्ष्यते, यथार्हं स्वयं कुर्वीथाः। राजा तदवधार्य वज्राहत इव क्षणं मौनी तस्थौ। ज्यौतिषिकं विससर्ज। सा वार्ता भोजजननीसहचर्या दास्यैकया विपुलस्तम्भान्तरितया श्रुता भोजमात्रे च उक्ता, सा पुत्रमारणाद् बिभाय। राजाऽपि कण्टिकागृहमगात्। साऽपि राजानं सचिन्तमालोक्या-भाणीत्–देव! अद्य कथं म्लानवदनः?। राजाऽऽह स–किं क्रियते? विधिः कुपितः, पुत्रान्मे मृत्युर्ज्ञानिना दृष्टप्रत्ययशतेनोक्तः। कण्टिका वदति स–का चिन्ता? मारय पुत्रम्। सुतमपि निर्दलयन्ति राज्यलुब्धाः, सुतो न सुतः, सुतरूपेण शत्रुरेव सः। तद्वचनात् दुन्दुकः सुतं जिघांसयामास। यावता घातयिष्यति तावता भोजमात्रा पाटलीपुरे स्वभ्रातॄणां शूराणां राज्यश्रीस्वयंवरमण्डपानां स्नेहलानां धर्मज्ञानामग्रे प्रच्छन्न-लेखेन ज्ञापितं यथा—एवं एवं भवतां भागिनेयो विनंक्ष्यति, राजा रुष्टः, आगत्य एनं गृहीत्वा गच्छत, रक्षत जीववत्, मा स्माहं भवत्सु जीवत्सु निष्पुत्राऽभूवमिति। तेऽप्याग-च्छन्, दुन्दुकमनमन्, उत्सवमिषेण भागिनेयं भोजं गृहीत्वा पाटलिपुरमगमन्, तत्र तमपीपठन्, अलीललन्, शस्त्राभ्यासमचीकरन्। यावन्नवमं वर्षं तत्र तस्य पञ्चाष्टदिनैः कति-भिरप्यूनमतिक्रामति स्म, कण्टिका दुन्दुकं विज्ञपयति स्म—देव! पुत्ररूपः शत्रुस्ते मातृशाले वर्धते, नखच्छेद्यं परशुच्छेद्यं मा कुरु, अत्रानीय छन्नं यमसदनं नय। राजाऽऽह—सत्यमेतत्। ततो दूतमुखेन दुन्दुको भोजं तन्मातुलपार्श्वेऽयाचीत्। ते भोजं नार्पय-न्ति। पुनः पुनः प्राह, दूतान् दुन्दुकः प्रहिणोति। भोजमातुलाः प्राहुः—राजन्! वयं तव भावं विद्मः। नार्पयामः। विधर्मपात्रमसौ। अन्योऽपि शरणागतो रक्ष्यः क्षत्रियैः, किं पुनरीदृग् भगिनीपुत्रः? बलात्कारं ब्रूषे चेद् युद्धाय प्रगुणीभूयाः। वयं भगिनीपतये चम-त्कारं दर्शयिष्यामः। तद्दूतैरागत्योक्तः दुन्दुकः कुपितोऽपि तान् हन्तुं न क्षमः। भोजोऽपि तैः पितुर्दुष्टत्वं ज्ञापितः कवचहर उपपितृ नैति। ततो दुन्दुकेन बप्पभट्टिसूरयः प्रार्थि-ताः–यूयं गत्वा भोजं सुतमनुनीयानयत, मानयत माम्। अनिच्छन्तोऽपि तत्सैनिकैः सह पाटलीपुत्रं चेलुः। अर्धमार्गं संप्राप्ताः। स्थित्वा विमृष्टं ज्ञानदृशा–भोजस्तावन्मम वचसा नृपसमीपं नैष्यति, आनीयते वा यथा तथा तदाऽऽनीतोऽपि पित्रा हन्येत, वालङ्घने राजाऽपि क्रुद्धो मां हन्ति, तस्माद् 'इतो व्याघ्र इतो दुस्तटी'ति न्यायः प्राप्तः, साम्प्रतं च

१ 'जीवत्स्वद्रव्यंसव। तत्र तस्य पञ्चाब्दी दिनैः' इति पाठान्तरम्। २ 'नातिक्र०' इति पाठः।

ममायुः दिनद्वयमवशिष्यते, तस्मादनशनं शरणमिति विमृश्यासन्नस्था यतयो भाषिताः—नन्नसूरिगोविन्दाचार्यौ प्रति हितं ब्रूयात। श्रावकेभ्योऽपि मिथ्या दुष्कृतं ब्रूयात। परस्परममत्सरतामाद्रियध्वम्, क्रियाः पालयत, बालवृद्धान् लालयत। न वयं युष्मदीयाः, न यूयमस्मदीयाः। सम्बन्धाः कृत्रिमाः सर्वे। इति शिक्षयित्वाऽनशनस्थाः शमताप्रपन्नाः।

"अर्हतस्त्रिजगद्वन्द्यान्, सिद्धान् विध्वस्तबन्धनान्।
साधूंश्च जैनधर्मं च, प्रपद्ये शरणं त्रिधा ॥ १ ॥–अनु०
महाव्रतानि पञ्चैव, षष्ठकं रात्रिभोजनम्।
विराधितानि यत् तत्र, मिथ्यादुष्कृतमस्तु मे ॥ २ ॥"–अनु०

इति ब्रुवाणा आसीना अदीनाः कालमकार्षुः। श्रीबप्पभट्टिसूरीणां श्रीविक्रमादित्याद्-ष्टशतवर्षेषु ( सं० ८०० ) गतेषु भाद्रपदशुक्लतृतीयायां रविदिने हस्तर्क्षे जन्म, पञ्चनवत्यधिकेषु ( सं० ८९५ ) गतेषु स्वर्गारोहणं, तदैव मोढेरके नन्नसूरीणामग्रे भारत्योक्तं—भवद्गुरव (रुबान्धवा ?) ईशानदेवलोकं गताः। तत्र बाढं शोकः प्रससार।

"शास्त्रज्ञाः सुवचोऽन्विता बहुजनस्याधारतामागताः
सद्वृत्ताः स्वपरोपकारनिरता दाक्षिण्यरत्नाकराः।
सर्वस्याभिमता गुणैः परिवृता भूमण्डनाः सज्जनाः
धातः! किं न कृतास्त्वया गतधिया कल्पान्तदीर्घायुषः? ॥१॥"–शार्दूल०

वृद्धैस्तु प्रबोधो दत्तः—

"हित्वा जीर्णं नवं देहं, लभते भो पुनर्नवम्।
कृतपुण्यस्य मर्त्यस्य, मृत्युरेव रसायनम् ॥ १ ॥"–अनु०

इति ॥

दुन्दुकेन सूरिभिः सह प्रहिताः सैनिकास्ते व्यावृत्य दुन्दुकपार्श्वं गताः। सोऽपि पश्चात्तापानलेन दन्दह्यते स्म। भोजेनापि समातुलेन सूरिशिष्याणामन्येषामपि लोकानां मुखादवगतं यत् सूरय एवमर्थं तव पार्श्वं नाजग्मुः—मा स्मायमस्मदुपरोधशङ्काक्षुब्धचित्तः पितुः पार्श्वगतो मर्तेति कृपां दधुः। तदेतदाकर्ण्य भोजस्तथा पीडितो यथा वज्रपातेनापीड्यते, पितुरन्तिकं नागादसौ। एकदा मालिकः कश्चित् पूर्वमामराजभृत्यो विदेशे भ्रमित्वा भोजान्तिकमाययौ पाटलीपुरे। तेनोक्तम्—देव! त्वमस्मत्स्वामिकुलप्रदीपः, मया विदेशे सद्गुरोर्मुखाद् विद्यैका लब्धा मातुलिङ्गी नाम, ययाऽभिमन्त्रितेन मातुलिङ्गेन हताः करिहरिप्राया अपि बलिनो म्रियन्ते, मानवानां तु का कथा? देव! गृहाण त्वम्। भोजेन सा तस्मादादत्ता, प्रमाणिता, सत्या, चिन्तितकृत्। मालिको दानमानाभ्यां भोजेन रञ्जितः। मातुलाः सर्वे भोजेन विद्याशक्तिं प्रकाश्य तोषिताः। ते ऊचुः—यदीयं ते शक्तिस्तदा प्राभृतमिषेण मातुलिङ्गानि गृहीत्वा अस्माभिः सह पितुः समीपं व्रज। पितरं निपात्य राज्यं गृहाण। तद् रुरुचे भोजाय, चलितो बहुमातुलिङ्गशाली सन्, गतः पितु-

द्वारं, कथापितं च-तात! त्वं पूज्योऽहं शिशुः, त्वत्तो मरणं वा राज्यं वा सर्वं रम्यं मे। राजा संतुष्टः, अहो विनीतः सुत आयातु इति विमृश्य आहूतो भोजः, सोऽपि ततो मध्यमागतः, एकासनस्थौ कण्टिकाराजौ मातुलिङ्गेन जघान, सम्यग् विद्या नान्यथा। उपविष्टो दुन्दुकराज्ये भोजः। तन्मातुला अतुल्यं तोपं दधुः। माता पद्मा प्रससाद। दुन्दुकेन धनहरणग्रासोद्दालादिना दूनचरा राजन्यकाः पुनर्जातमात्मानं मेनिरे। महाजनो जिजीव, वर्णाः सर्वे उन्मेदुः। संसारसरोऽम्भोजं भोजं कमला भेजे। दोर्बलात् परिच्छदबलाच्च जगज्जिगाय ॥

अथ कृतज्ञतया मोढेर(क)पुरे नन्नसूरये विज्ञप्तिं दत्त्वा उत्तमनरानप्रैषीत्। ते गतास्तत्र, विज्ञप्तिर्दर्शिता, तैस्तत्र वाचिता नन्नसूरिगोविन्दाचार्याद्यैर्यथा—स्वस्ति श्रीमोढेरे परमगुरुश्रीनन्नसूरिगोविन्दसूरिपादान् गोपगिरिदुर्गात् श्रीभोजः परमजैनो विज्ञापयति यथा—इह तावत् प्रज्ञागङ्गाहिमाद्रयः सामाचारीनारीसौभाग्यवर्धनमकरध्वजाः क्षितिपतिसदःकुमुदिनीश्वेतदीधितयो भारतीधर्मपुत्राः श्रीबप्पभट्टिसूरयस्त्रिदिवलोकलोचनलेह्यललितपुण्यलावण्यतामादधिरे, तत्स्थाने सम्प्रति दीर्घायुषो यूयं स्थ। दृष्ट्वैतां विज्ञप्तिं प्रमाणेनात्र पादा अवधार्याः, (तद्) दृष्ट्वा भक्तिरहस्यं सूरयः ससङ्घाः सुतरां जहर्षुः, सङ्घानुमत्या गोविन्दाचार्यं मोढेरके मुक्त्वा श्रीनन्नसूरयो गोपगिरिमसरन्। भोजः पादचारेण ससैन्यः संमुखमायातः, गुरोः पादोदकं पपौ। उल्लसत्तृष्णो गिरं शुश्राव। स्थानस्थानमिलितजनहृदयसंघट्टचूरितहारिहारमौक्तिकधवलितराजपथं पुरं निनाय, सिंहासने निवेशयामास (तान्)। ततः मङ्गलं चकार नान्दीध्वनिः उत्सवाः नर्तनं आनन्दः तदानन्दमयो बभूव, तदादेशान् शुश्राव, तद्भक्तानात्मवद् अदर्शत्, मन्तुयुक्तान् विपवदीक्षांचक्रे। तदुपदेशाज्जिनमण्डितां मेदिनीं विदधे। दुन्दुकस्य तादृग् मरणं स्मृत्वा कुपथेषु न रेमे। मथुराशत्रुञ्जयादिषु यात्रां चकार। एकादशव्रतानुचरणपूर्वं राजर्षेर्यशांसि उद्धार, चिरं राज्यं चकार। इत्येवं गोपगिरौ भोजो धर्मं लालयामास, प्रजाः पालयामास, उदियाय च। अन्यैरपि पुण्यपुरुषैरेवं भाव्यम्[2] ॥

॥ इति श्रीबप्पभट्टिसूरिचरित्रं समाप्तम्[1] ॥

१ प्रतिप्रान्तेऽयमुल्लेखः—

महोपाध्यायश्रीसकलचन्द्रशिष्यमहोपाध्यायश्रीशान्तिचन्द्रशिष्यगणिरतिचन्द्रेण लिपीकृतं (उदेपुरात् सार्धक्रोशे) देवालीनगरे। ग्रन्थाग्रं ५५९ बप्पभट्टिचरित्रम् ॥ ॥ शुभं भवतु ॥ संवत् १६५१ वर्षे (वर्षे) ॥

२ इदं चरित्रं श्रीराजशेखरसूरिप्रणीतचतुर्विंशतिप्रबन्धस्यैकतमः प्रबन्ध इति मुद्रितपुस्तकदर्शनेन तदनुवादावलोकनेन च प्रतिभाति।

# पाठान्तराणि

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| १ | १४ | तस्यामन्त्रणे | तस्यामन्त्रणम् |
| १ | १४ | क्वचित् डः | क्वचित् डप्रत्ययः |
| १ | १६ | ०नान्त्यस्य लोपः | ०नान्त्यस्वरलोपः |
| १ | १६ | ०दिकः पापवर्गौ | ०दिकवर्गौ |
| १ | १७ | तस्यामन्त्रणे | तस्यामन्त्रणम् |
| ६ | ११ | नवरै | नेन्द्रै |
| ८ | १२ | रतः | रतः—सक्तः |
| ९ | ३० | भवर्णात् पातु | भवर्णात् नुः—पुरुषस्य पातु |
| ९ | ३१ | मध्यवर्तिनं | मध्ये वर्तिनं |
| १२ | ५—६ | | तृतीयचतुर्थचरणयोः पूर्वापरीभावः |
| १२ | ९ | स जिनाजितः | जिनाजितः सः |
| १२ | १० | त्रिजगद्भिः | त्रिजगद्भिरपि |
| १३ | २५ | शरणा० | चरणा० |
| १४ | २ | किंविधान् | किंविशिष्टान् |
| १४ | ३ | शेषाद्विभाषा | शेषाद्वा |
| १७ | ४ | यया | यया सा |
| १८ | १० | श्रमरहितया | अश्रमया—श्रमरहितया |
| २४ | २ | शान्ता | विद्वज्जनस्य धनं, शान्ता |
| २५ | १५ | कृताखिलजगज्जनाहित० | समस्तजगतां कृताऽहित० |
| २५ | २० | सुरभिस्थिता | सुरभिस्थिता—गोस्थिता |
| २५ | २१ | बिभर्वीति | बिभ्रती |
| ३४ | १० | समीरम् | वायुम् |
| ३५ | १८ | निवहः | निवहस्तीर्थकृताम् |
| ३५ | १८ | भवोदधौ | भवोदधौ—संसारसमुद्रे |
| ३५ | २० | वितरतु | वितरतु—विस्तारयतु |
| ३६ | १८ | अतीव शिवा | अतिशयेन शिवा—कल्याणी शिवहेतुत्वात् |
| ३७ | १० | कनकच्छविं | कनकरुचिं |
| ४३ | १७ | अहिता—वैरिणः | अहिता एव वैरिणः |

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| ४३ | १८ | बहुप्रकारैः | बहुधा—बहुप्रकारैः |
| ४५ | ७ | नित्यं सौख्यं | अतिसौख्यं |
| ४५ | ९ | भवत्येव चेति | भवत्येवेति |
| ५२ | २३ | यस्मिन् | यस्मिंस्तम् |
| ५४ | ४ | घातका | घातुका |
| ५४ | १० | घातकानां | घातुकानां |
| ६४ | ९ | अतीष्टा | अभीष्टा |
| ८७ | ७ | पद्मं हस्ते यस्याः सा | अस्य स्थानं 'हस्तिकाय'पदस्य पूर्वे |
| ९२ | १६ | यस्याः | यस्यां |
| ९४ | १३ | घस्मरः | स एव विशिष्टो घस्मरः |
| ९९ | ६ | यया | यया सा |
| १०० | १० | सा | ० |
| १०३ | २७ | तुशब्दश्चार्थे | तुशब्दः पुनःशब्दार्थे |
| १०९ | २१ | जगता | बाहुभ्यो जगता |
| ११७ | ३० | गुरूत्सवानां | उत्सवानां |
| १२९ | ९ | अरहितापश्चासौ | अरहिता—अत्यक्ता आपो—जलं येन सोऽरहितापश्चासौ |
| १३१ | १६ | वर्धने | वर्धमाने |

१३२ २५ टीकान्तरम्—श्रुतं—ज्ञानं तस्य निधिः तद्विषयं ईशितुं शीलं यस्याः सा तथोक्ता तत्संबोधनं हे श्रुतनिधीशिनि स्वामिनि ! बुद्धिरेव वनावली तस्या दवो बुद्धि-वनावलीदवस्तं बुद्धिवनावलीदवं अज्ञानलक्षणम् । तथा भवः—संसारस्तस्माद् भियो—भयानि तासां पदं—स्थानं हे देवि ! आदरात्—प्रयत्नात् ममैतत् सर्वं हर—अपनयेति सम्बन्धः । तथा अघमं—पापं नुदति—प्रेरयति या सा तत्संबोधनं अघमनुत् । किंभूतं पदम् ? 'रचितापदं' रचिता—विहिता आपद् येन तत् तथोक्तम् । केन हेतुभूतेन ? तमसा—अज्ञानेन । किंविशिष्टेन तमसा ? 'अनु-त्तमसारचिता' अनुत्तमं—अनिकृष्टं पाराहिकं यद् वस्तु तस्य सारः अनुत्तम-सारस्तं चिनोति—वृद्धिं नयतीति अनुत्तमसारचित् तेन । कदाचिदिदं विशे-षणं भगवत्याः क्रियते । हे देवि ! किंविशिष्टा त्वम् ? । न विद्यते उत्तमा उत्कृष्टा यस्याः सा 'अनुत्तमा' । सारो—बलं तेन चिता—व्याप्ता सारचिता । सा अनुत्तमा सारचितेति गतार्थम् ॥ ८० ॥

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| १३७ | ८ | अवत् | अवत्—रक्षत् |
| १४० | १० | तां | त्वं |
| १४१ | २० | नुताः | नुताः—स्तुताः |
| १४२ | ३० | पात—रक्षत इति क्रिया | पात—अपितु पिवत |
| १५० | १० | यत्र तस्मिन् | यस्मिन् |
| १५० | १२ | अवरा | अह्वानयो—ह्वानिरहिता घना यत्र । अवरा |
| १५२ | २० | निर्धा(दा)रणे | निर्दारणे |
| १६० | | स्पष्टं | निर्मलम् |
| १६२ | २३ | काव्यान्तेऽयमुल्लेखः— | |

इति श्रीचतुर्विंशतिजिनस्तुतयः कृता वप्पभट्टिसूरिभिः ॥

| | | | |
|---|---|---|---|
| १८७ | ५ | पाटलिपुरे | पाटलापुरनगरे |
| १८७ | ६ | नमस्कारकरणाय | नमस्करणाय |
| ,, | ७ | मोढेरकपुर० | मोढेरपुर० |
| ,, | ७ | चात्माराम० | रात्रावात्माराम० |
| ,, | ९ | प्रभाते च | प्रातः |
| ,, | १० | द्र(द्रु) | द्रु |
| ,, | १२ | सपरिच्छदाः | प्रचुरपरिच्छदाः |
| ,, | १२ | हन्तुं | हन्तुमर्हं |
| ,, | १५ | ०त्रागतः | ०त्र समागतः |
| ,, | १७ | आलापितः—वत्स ! | आलेपे—वत्सक ! |
| ,, | १८ | ०यस्तुष्टिं न मन्यन्ते | ०यस्तृप्तिं न तन्वते |
| ,, | १९ | करप्राप्यानि | चयप्राप्यानि |
| ,, | १९ | लक्षणसाहित्यादीनि | लक्षणतर्कसाहित्यादीनि |
| ,, | २० | आगतौ | वन्दितुमागतौ |
| ,,* | २३ | भवतितीर्षुः | भवं तितीर्षुः |
| ,, | २४ | मत्कुलतन्तुः | नः कुलतन्तुः |
| ,, | २४ | उदितम् | गदितम् |

* एकस्मिन्नेव पृष्ठे इयन्ति पाठान्तराणि मयोपलब्धानि श्रीहेमचन्द्राचार्यग्रन्थावल्यां विंशतितमाङ्के ग्रन्थे मुद्रिताद् श्रीराजशेखरसूरिकृतचतुर्विंशतिप्रबन्धात् । अत इदं कार्यं कियत्परिश्रमजन्यं तज्जानाति विद्वानेव । ततोऽतः परं प्रायः संदिग्धस्थलेषु पाठान्तराणि मया दीयन्ते ।

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| १८७ | २६ | बुद्धिः प्रलयं | बुद्धिर्विलयं |
| १८८ | १३ | यशोधर्म | यशोवर्म |
| १८८ | १८ | स्वनामादि (म साक्षात्) ब्रुवते | स्वनाम नामाददते |
| १८९-९० | | (त्वया निर्वासिता, सपुत्रा समानीयतां, राज्ञा तुष्टाऽऽनीता) | तदा देवेन सपत्नीवचसा निष्कासिता सा प्रत्यानीयत। राज्ञा सा स्वसौधमानायिता सपुत्रा गौरविता च। |
| १९६ | १६-१८ | (सूरिभिर्धर्मनृपो गोपगिरिगमनाय पृष्टः, धर्मेण प्रतिज्ञा स्मारिता, सूरिभिस्तत्पूर्त्तिः स्थगीधररूपेणामागमनेनोक्ता, प्रधानजनः) | सूरीश्वरो विलम्ब्याय प्रहरद्वयं कामपि कथामचीकथत्। रसावतारः स कोऽपि जातो यो रम्भातिलोत्तमाप्रेक्षणीयकेऽपि दुर्लभः। आमो राजाऽमूल्यं कङ्कणं ग्रहणके मुक्त्वा वेश्यागृहे उषित आसीत्। सा तु लक्षणापतेर्वारस्त्री। एकं कङ्कणमामो राजद्वारे मुम्बन्नगात्। अपराह्णे राज्ञः पार्श्वाद् वप्पभट्टिसूरिभिर्मुत्कलापितम्—देव! गोपगिरावामपार्श्वे यामः, अनुज्ञां दीयताम्। धर्मेण भणितम्—भवतामपि वाणी विघटते, भवद्भिर्भणितमभूत्—यदा तव दृष्टौ आमः समेत्यास्मानाह्वयति, तदा यामो नार्वाक्। तत् किं विस्मृतम्?। जिह्वे किं वो द्वे स्तः?।' आचार्या जगदुः—श्रीधर्मदेव! मम प्रतिज्ञा पूर्णा। राजाऽऽह—कथम्?। सूरिर्वदति—आमो राजाऽत्र स्वयमागतस्तव दृष्टौ। राजाऽऽह—कथं ज्ञायते?। सूरिः—यदा भवद्भिः पृष्टं—भवतां स्वामी कीदृशः? विशिष्टैस्तदा भणितम्—स्थगिकाधररूपः, तथा 'बीजउरा' शब्दोऽपि विमृश्यताम्, 'दोरा' शब्दोऽपि यो मयोक्तोऽभूत्, तस्मात् प्रतिज्ञा पूर्णा मे। अत्रान्तरे केनापि राजद्वारादामकङ्कणं नृपधर्महस्ते दत्तमामनामाङ्कितम्। द्वितीयं वेश्यया दत्तम्। तद् दृष्ट्वा नष्टसर्वस्वस्तद्व(?)न इव शुशोच—धिङ् मां यन्मया शत्रुः स्वगृहमायातो नार्चितो न च साधितः। धर्मेण मुत्कलिताः सूरयः पुरः क्वापि स्थितेनामेन सह जग्मुः। मार्गे गच्छता आमेन पुलीन्द्र एको जलाशयमध्ये जलं छगलवन्मुखेन पिबन् दृष्टः। आमराजेन सूरीणामग्रे प्रोक्तम्—"पसु जिम पुलिंदउ पउ पीयइ पंथिउ कवणिण कारणिण" |

| पृष्ठम् | पङ्क्तिः | मूलपाठः | पाठान्तरम् |
|---|---|---|---|
| | | | सूरिभिरभाणि—"कर बेवि करंबिय कज्झलिण मुद्धहु-अंसु निवारणिण"। राज्ञा प्रत्ययार्थं स समाकार्य० । |
| १९६ | २४ | वप्पभट्टे (टे)! प्रयत्नात् | वत्सक! वप्पभट्टे! |
| १९९ | २९ | (भणितः) | पृष्टः |
| | १३ | सद्रथा (प्लवाः) | सवरूथा |
| २०१ | ३ | व्यशि(श्रि)यत | व्यशिश्रणत् |
| २०१ | ८-९ | (श्रुत्वा० प्रसङ्गगतान्) कामात्तान् रागवादान् | मोढेरकपुरे स्तः । गुणोत्कण्ठयाऽमितसैन्य आमस्तत्र गतः ।-तदा नन्नसूरिर्व्याख्यानेऽवसरायातान् वात्स्यायनोक्तान् कामाङ्गभावान् |
| २०१ | २५ | शत्रड(झ?) | शत्रझा० |
| २०३ | १८ | सांकल्पिकं मद(ह)ज्जनं— | सांकल्पिकमिदं जनं— |
| २०४ | १ | घातयामि । एवं प्र(टल) | अथवा ज्ञातम्—सर्वजनसमक्षं पापमुद्दीर्ये काष्ठानि भक्ष-यामि । एवं टल० |
| २०४ | १० | परेपां(रमां) | परमरेखां |
| २०६ | १६-१७ | ( बहुप्रार्थनेऽपि० दत्ता ) | मुनिर्नेच्छति ताम् । तया मुनये पादतलप्रहारे दीयमाने नूपुरं मुनिवरचरणे प्रविष्टं काकतालीयन्यायेन अन्धवर्त्त-कीन्यायाच्च । राजा तद् दृष्ट्वा सूरये समस्तां ददौ |
| २०६ | १८ | कमाडसासज्ज | कवाडमासज्ज |
| २०८ | १८ | (कृतम्) | चक्रे |

# स्पष्टीकरणसाधनीभूतग्रन्थानां सूची

(સ્પષ્ટીકરણમાં સાધનરૂપ ગ્રન્થોની સૂચી)

| जैनग्रन्थाः | कर्तारः |
| --- | --- |
| सिद्धहेमशब्दानुशासनम् | कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिः |
| अभिधानचिन्तामणिः | ,, |
| त्रिषष्टिशलाकापुरुषचरित्रम् | ,, |
| अयोगव्यवच्छेदद्वात्रिंशिका | ,, |
| स्तुतिचतुर्विंशतिका | श्रीशोभनमुनीश्वरः |
| श्रीचतुर्विंशतिजिनानन्दस्तुतयः | मुनिवर्यश्रीमेरुविजयः |
| स्तोत्ररत्नाकरस्य द्वितीयो विभागः | प्रकाशयित्री—श्रीयशोविजयजैनग्रन्थमाला |
| भक्तामरस्तोत्रम् | श्रीमानतुङ्गसूरिः |
| न्यायकुसुमाञ्जलिः | न्यायविशारद—न्यायतीर्थ—मुनिश्रीन्यायविजयः |
| अध्यात्मतत्त्वालोकः | ,, |
| स्थानाङ्गम् | गणधरः |
| तत्त्वार्थाधिगमसूत्रम् | वाचकवर्यश्रीउमास्वातिः |
| आचारदिनकरः | श्रीवर्धमानसूरिः |
| निर्वाणकलिका | श्रीपादलिप्तसूरिः |
| जम्बूद्वीपप्रज्ञप्तिः | गणधरः |
| जम्बूद्वीपप्रज्ञप्तिवृत्तिः | जगद्गुरुश्रीविजयहीरसूरिः |
| प्रवचनसारोद्धारः | श्रीनेमिचन्द्रसूरिः |
| विचारसारप्रकरणम् | श्रीप्रद्युम्नसूरिः |
| नयरहस्यम् | न्यायविशारद-न्यायाचार्य-महामहोपाध्याय-श्रीयशोविजयः |
| ऐन्द्रस्तुतिः | ,, |
| मार्गद्वात्रिंशद्द्वात्रिंशिका | ,, |
| प्रमाणनयतत्त्वालोकालङ्कारः | श्रीवादिदेवसूरिः |
| सप्तभङ्गीतरङ्गिणी | श्रीविमलदासः |
| सप्तभङ्गीप्रकरणम् | |
| धर्मकल्पद्रुमः | आगमिकश्रीउदयधर्मगणिः |

| जैनग्रन्थाः | कर्तारः |
| --- | --- |
| सुबोधिका ( कल्पसूत्रवृत्तिः ) | उपाध्यायश्रीविनयविजयः |
| शान्तसुधारसः | ” |
| लोकप्रकाशः | ” |
| इन्द्रियपराजयशतकम् | |
| सिन्दूरप्रकरः | श्रीसोमप्रभसूरिः |
| वीरभक्तामरम् | उपाध्यायश्रीधर्मवर्धनगणिः |
| विशेषावश्यकम् | क्षमाश्रमणश्रीजिनभद्रगणिः |
| नन्दीसूत्रम् | क्षमाश्रमणश्रीदेववाचकसूरिः |
| उज्जयन्तस्तवः | |
| गुणस्थानक्रमारोहः | श्रीरत्नशेखरसूरिः |
| योगदृष्टिसमुच्चयः | श्रीहरिभद्रसूरिः |
| महानिशीथम् | गणधरः |
| षट्पुरुषचरित्रम् | श्रीक्षेमङ्करसूरिः |
| प्रभावकचरित्रम् | श्रीचन्द्रप्रभसूरिः |
| उपदेशरत्नाकरः | श्रीमुनिसुन्दरसूरिः |
| શ્રીપાલ રાજાનો રાસ | ઉપાધ્યાય વિનયવિજયજી |

| अजैनसंस्कृतग्रन्थाः | कर्तारः |
| --- | --- |
| वृत्तरत्नाकरः | श्रीभट्टकेदारः |
| श्रुतबोधः | महाकविश्रीकालिदासः |
| मृच्छकटिकम् | श्रीशूद्रककविः |
| वैराग्यशतकम् | महर्षिश्रीभर्तृहरिः |

# समासविग्रहः ।

१—नम्राश्च ते इन्द्राश्च नम्रेन्द्राः 'कर्मधारयः', नम्रेन्द्राणां मौलयः नम्रे० 'तत्पुरुषः', नम्रेन्द्रमौलिभ्यो गलिता नम्रे० 'तत्पुरुषः', पारिजातानां मालाः पारिजातमालाः 'तत्पुरुषः', उत्तमाश्च ताः पारिजातमालाश्च उत्तम० 'कर्मधारयः', नम्रेन्द्रमौलिगलिताश्च ता उत्तमपारिजातमालाश्च नम्रे० 'कर्मधारयः', नम्रेन्द्रमौलिगलितोत्तमपारिजातमालाभिरर्चितौ क्रमौ यस्य स नम्रे० 'बहुव्रीहिः', तत्संबोधनं नम्रे० । अरीणां जातं अरिजातं 'तत्पुरुषः', अपगतं अरिजातं यस्य स अपारि० 'बहुव्रीहिः', तत्सं० अपा० । नाभेरपत्यं पुमान् नाभेयः, तत्सं० नाभेय ! । भुवनानां त्रिकं भुवन० 'तत्पुरुषः', भुवनत्रिकं पातीति भुवन० 'उपपद'समासः, तत्सं० भुवन० । अपवर्गं दत्ते इति अपवर्गदायी 'उपपद'-समासः, तत्सं० अप० । जयतीति जिनः, तत्सं० जिन ! । मदन आदौ यस्य स मदनादिकः 'बहुव्रीहिः', पापानां वर्गः पापवर्गः 'तत्पुरुषः', मदनादिकश्चासौ पापवर्गः मदना० 'कर्मधारयः', अस्तो मदनादिकपापवर्गो येन सः अस्त० 'बहुव्रीहिः', तत्सं० अस्त० ॥

२—अद्रिणा समः अद्रि०, 'तत्पुरुषः', अद्रिसमो विग्रहो यस्य सः अद्रि० 'बहुव्रीहिः', तापनीयस्य राशिः तापनीयराशिः 'तत्पुरुषः', अद्रिसमविग्रहश्चासौ तापनीयराशिः अद्रि० 'कर्मधारयः', प्रदानस्य विधिः प्रदानविधिः 'तत्पुरुषः', अद्रिसमविग्रहतापनीयराशेः प्रदानविधिः अद्रि० 'तत्पुरुषः', तेन अद्रि० । दुःखमेव शत्रुः दुःख० 'कर्मधारयः' । जन्मास्ति येषां ते जन्मवन्तः, तेषां जन्म० । जिनेषु वराः जिनवराः 'तत्पुरुषः' ॥

३—दोषा एव दारूणि[1] दोषदारूणि 'कर्मधारयः', दोषदारूणां दहनानि दोष० 'तत्पुरुषः', तेषु दोष० । मेघाज्जायते इति मेघजा 'उपपद'समासः । जिनस्य इदं जैनं, तत् जैनम् । अघानां जालं अघ० 'तत्पुरुषः', तत् अघ० ॥

४—सुराणां मन्त्रिणः[2] सुरमन्त्रिणः 'तत्पुरुषः', सुरमन्त्रिभिः समाः सुर० 'तत्पुरुषः' । नास्ति धीर्येषां ते अधियः 'बहुव्रीहिः' । नास्ति समानो यस्य सः असमानः 'बहुव्रीहिः', तं असमानम् । वाचो देवता वाग्देवता 'तत्पुरुषः' । कुत्सिता वादिनः कुवादिनः 'कर्मधारयः', कुवादिनां कुलं कुवादि० 'तत्पुरुषः', हतं कुवादिकुलं यया सा हत० 'बहुव्रीहिः' । भव एव ऋणं भवर्णं 'कर्मधारयः', तस्माद् भवर्णात् । विकसन्ति च तानि मुकुलानि[3] च विकसन्मुकुलानि 'कर्मधारयः', कुन्दानां विकसन्मुकुलानि कुन्द० 'तत्पुरुषः', कुन्दविकसन्मुकुलानां आभा यस्य स कुन्द० 'कर्मधारयः', कुन्दविकसन्मुकुलाभो वर्णो यस्याः सा कुन्द० 'बहुव्रीहिः' ॥

---

१ दारुशब्दः पुंल्लिङ्गोऽपि वर्तते । २ मन्त्रिशब्द इकारान्तोऽपि । ३ मुकुलशब्दः पुंल्लिङ्गोऽपि ।

